[ विद्याभवनसंस्कृतग्रन्थमाला ५ ]

॥ श्रीः ॥

# संस्कृतालोकः

( तृतीयः किरणः )

अष्टमकक्षाकृते

रामबालकशास्त्री

प्रकाशकः

चौखम्बाविद्याभवन, चौक, बनारस-१



सं० २०११ ] [ ई० १९५४

# पाठसूची

॥ श्रीः ॥

# संस्कृतालोकः

## उद्बोधः

वर्णानामर्थसङ्घानां, रसानां छन्दसामपि ।
मङ्गलानाञ्च कर्तारौ, वन्दे वाणीविनायकौ ॥ १ ॥

या कुन्देन्दुतुषारहारधवला या शुभ्रवस्त्रावृता
या वीणावरदण्डमण्डितकरा, या श्वेतपद्मासना ।
या ब्रह्माच्युतशङ्करप्रभृतिभिर्देवैः सदा वन्दिता
सा मां पातु सरस्वती भगवती निःशेषजाड्यापहा ॥ २ ॥

यं शैवाः समुपासते शिव इति ब्रह्मेति वेदान्तिनो,
बौद्धाः बोध इति प्रमाणपटवः कर्त्तेति नैयायिकाः ।
अर्हन्नित्यथ जैनशासनरताः कर्मेति मीमांसकाः,
सोऽयं वो विदधातु वाञ्छितफलं त्रैलोक्यनाथो हरिः ॥ ४ ॥

कल्याणानां निधानं कलिमलमथनं पावनं पावनानां,
पाथेयं यन्मुमुक्षोः सपदि परपदप्राप्तये प्रस्थितस्य ।
विश्रामस्थानमेकं कविवरवचसां जीवनं सज्जनानां,
बीजं धर्मद्रुमस्य प्रभवतु भवतां भूतये रामनाम

समुद्रवसने ! देवि ! पर्वतस्तनमण्डले !
विष्णुपत्नि ! नमस्तुभ्यं पादस्पर्शं क्षमस्व मे ॥ ६ ॥

## हस्तिपकः




नरेशः—महेश ! एषः कः महान् पशुः ?

महेशः—एषः महान् पशुः गजः ।

नरेशः—एषः गजः ?

महेशः—एवम् , एषः गजः ।

नरेशः—एतस्य गजस्य उपरि कः तिष्ठति ?

महेशः—एतस्य गजस्य उपरि एकः चालकः पुरुषः तिष्ठति, यम् हस्तिपकम् वदति लोकः ।

नरेशः--हस्तिपकः किम् करोति ?

महेशः--हस्तिपकः हस्तिनम् ( गजम् ) चालयति । तेन तम् चालकम् हस्तिपकम् वदन्ति जनाः ।

नरेशः--भो महेश ! गजस्य मुखे एतानि कानि ?

महेशः--नरेश ! एषः गोपुच्छवत् लम्बमानः करः शुण्डः, तुण्डः, येन जलम् पिबति । अपरौ यौ द्वौ पश्यसि मुखे तौ द्वौ विशालौ दन्तौ । एतयोः उपयोगः बहूनां वस्तूनां निर्माणे भवति । भारतस्य अनेकेषु वनेषु गजाः भवन्ति येषु कामरूपे वने ( आसामप्रान्ते ) गजा बाहुल्येन मिलन्ति ।

नरेशः—इन्द्रस्य अपि वाहनम् गज एव भवति ।

महेशः—न हि, देवराजस्य इन्द्रस्य वाहनम् गजम् गजराजं ऐरावतम् वदन्ति जनाः । ऐरावतः शुक्लः भवति ।

नरेशः--भो महेश ! वनेषु जनाः केन प्रकारेण गजम् धरन्ति, स्ववशे कुर्वन्ति ? अहम् एतस्य परिज्ञानाय उत्सुकः भवामि । अतः मां वद ।

महेशः--नरेश ! गजं धरन्ति मानवाः कठिनेन उद्योगेन । कथम् धरन्ति ? पश्चात् बोधयिष्यामि । वनेषु गजाः काष्ठम् तुदन्ति करेण धृत्वा नदीतटे च नयन्ति ।

**अभ्यासाय**—एतत् कस्य चित्रम् ? गजोपरि कः आरूढः ? अस्य मुखे किम् ? गजः कुत्र बाहुल्येन मिलति ? इन्द्रस्य किम् वाहनम् ? ऐरावतः कस्य वाहनम् ?

## उष्ट्रः




माधवी—भोः वासन्ति ! एतत् विचित्रम् चित्रम् पश्यामि ।

वासन्ती—माधवि ! त्वम् न जानासि एतत् कस्य चित्रम् ?

माधवी—अहम् न जानामि, न स्मरामि च एतत् कस्य चित्रम् ?

वासन्ती—एतत् उष्ट्रस्य चित्रम् ?

माधवी—स्मरामि उष्ट्रः आपणे अन्नस्य भारम् वहति ।

वासन्ती—आपणे गृहे सर्वत्र भारम् वहति । अन्नस्य काष्ठस्य घासस्य अपि च भारं वहति । भारवहने एषः कुशलः भवति ।

माधवी—एतस्य गजस्य पृष्ठे कस्य पदार्थस्य भारः ।

वासन्ती—एतस्य पृष्ठे काष्ठस्य भारः । जङ्गलात् एषः मोहमदः उष्ट्रस्य पृष्ठे विक्रयाय काष्ठम् आनयति ।

माधवी—अहो ! अस्य उष्ट्रस्य कीदृशम् भयङ्करम् शरीरम् !

वासन्ती—न केवलम् अस्य एव उष्ट्रस्य शरीरम् भयङ्करम्, अपि तु सर्वेषाम् उष्ट्राणाम् एतादृशम् एव शरीरम् भवति यादृशम् त्वम् चित्रे पश्यसि अस्य उष्ट्रस्य माधवि !

माधवी—मह्यम् न रोचते उष्ट्रस्य आकृतिः ।

वासन्ती—तुभ्यम् यः न रोचते, सः अन्येभ्योऽपि न रोचते, इति कथम् ?

माधवी—तदा उष्ट्रः कस्मै रोचते ?

वसन्ती—यः निजद्रव्यैः एतम् क्रीतवान् ।

माधवी—एतस्य कियत् मूल्यम् ?

वसन्ती—एतस्य कियत् मूल्यम् इति तु एतस्य क्रेता मोहम्मदः एव वदिष्यति । मरुदेशे भवति उष्ट्रस्य महान् उपयोगः ।

**अभ्यासाय**—एतत् कस्य चित्रम् ? उष्ट्रस्य पृष्ठे किम् ? उष्ट्ररक्षकः कुतः आगच्छति ? एतस्य उष्ट्रस्य कः रक्षकः ? उष्ट्रस्य कः उपयोगः ?

—०—

## जगद्गुरुः शङ्कराचार्यः

आद्यशङ्कराचार्यस्याविर्भावो दक्षिणभारते साक्षात् भगवतोऽवतारोऽभवत् । बौद्धधर्मेणाक्रान्तं वैदिकधर्मं पुनः सङ्घटयन् तन्मूलकमद्वैतवादं प्रकाशयन् तदर्थञ्चानेकशोऽपूर्वग्रन्थान् विरचयन् चतुर्दिक्षु चतुर्मठान् भारते प्रतिष्ठापयन् स्वल्पे वयस्येव लोकैर्जगद्गुरुत्वेन वन्दितः स्वधाम गतः श्रीजगद्गुरुः शङ्कराचार्यः । यस्य कर्मठाः शिष्योपशिष्याः वेदान्तपारगाश्चत्वार एकैकमठे प्रतिष्ठिताः प्रचारयन्ति वैदिकधर्मसिद्धान्तम् । भारते प्राच्यां गोवर्धनमठः, प्रतीच्यां शारदामठः, उदीच्यां ज्योतिष्मठः, अवाच्यां शृङ्गेरीमठः, इति चतुरो धर्ममठान् संस्थाप्य भारतीय संस्कृतिमरक्षत् । यस्यायमादेशस्य सारः—

आदेशः

सङ्गः सत्सु विधीयतां भगवतो भक्तिर्दृढा धीयतां,
शान्त्यादिः परिचीयतां दृढतरं कर्माशु सन्त्यज्यताम् ।
सद्विद्वानुपसृप्यतां प्रतिदिनं तत्पादुकाः सेव्यतां
ब्रह्मैकाक्षरमर्थ्यतां श्रुतिशिरोवाक्यं समाकर्ण्यताम् ॥ १ ॥

वाक्यार्थश्च विचार्यतां श्रुतिशिरः पक्षः समाश्रीयतां
दुस्तर्कात् सुविरम्यतां श्रुतिमतस्तर्कोऽनुसन्धीयताम् ।
ब्रह्मास्मीति विभाव्यतामहरहर्गर्वः परित्यज्यतां
देहेऽहंमतिरुज्झ्यतां बुधजनैर्वादः परित्यज्यताम् ॥ २ ॥

क्षुद्व्याधिश्च चिकित्स्यतां विधिवशात् प्राप्तेन सन्तुष्यतां,
स्वाद्वन्नं न तु याच्यतां प्रतिदिनं भिक्षौषधं भुज्यताम् ।
शीतोष्णादि विषह्यतां न तु वृथा वाक्यं समुच्चार्यता-
मौदासीन्यमभीप्स्यतां जनकृपानैष्ठुर्यमुत्सृज्यताम् ॥ ३ ॥



| | | |
|---|---|---|
| वयस्येव | = | वयसि + एव |
| कर्मण्यपि | = | कर्मणि + अपि |
| अप्यत्र | = | अपि + अत्र |
| अप्यद्य | = | अपि + अद्य |

एषु विग्रहेषु इकारात् परः अकारः असमानः स्वरः वर्तते । तेन इकारस्य यकारः भवति । तथैव असमाने स्वरे परे सति उकारस्य वकारः, ऋकारस्य रकारः भवति, स एव यण्सन्धिः ।

'इको यणचि'

असमाने स्वरे परे सति पूर्वपदान्तस्य इकारस्य यकारः, उकारस्य वकारः, ऋकारस्य रकारः भवति । यथा, यद्यपि, साध्वनुभवः पित्रादेशः इत्यादि ।



## संस्कृतभाषा

रमेशः—भोः सुरेश ! संस्कृतपठनाय मम इच्छा भवति, परन्तु संस्कृतम् कठिनम् । तेन संस्कृते चित्तम् न लगति ।

सुरेशः—तेन त्वं मन्दभाग्यः ।

रमेशः—भोः कथम् अहम् मन्दभाग्यः ?

सुरेशः—भोः संसारे यः संस्कृतम् नापठत्, तस्य जीवनोद्देश्यस्य साफल्ये सन्देहः ।

रमेशः—तदा योरपे कोपि न जीवनोद्देश्ये सफलः ?

सुरेशः—अथ किम् ! योरपेऽनेकदार्शनिकाः जाताः । दर्शनविषये कश्चन अद्वितीयश्च । सोऽपि जीवनेऽस्ति सफलो न वा—इत्यत्र भविष्यति सन्देह एव ।

रमेशः—योरपे कीदृशाः विज्ञाः दार्शनिकाः धुरन्धराः । तेषां जीवनतत्त्वसाफल्ये कथं तव सन्देहः ?

सुरेशः—भोः रमेश ! योरपस्य अर्थ एव पुरुषार्थः । योरपः अर्थात् भिन्नम् किमपि अन्यत् वस्तु न इच्छति । यः अर्थम् एव ईश्वरम् मनुष्यम् वा जीविनोद्देश्यं जानाति तस्य जीवनोद्‌देश्ये कथम् न सन्देहः ?

रमेशः—तर्हि संस्कृतात् कथम् भवति मनुष्यो मनुष्यः ?

सुरेशः—एवम्, मानवजीवनोद्देश्ये धर्मः अर्थः कामः मोक्षः इति सर्वम् पुरुषार्थचतुष्टयम् संस्कृतसाहित्यस्य मौलिकतत्त्वम्, एतेषु धर्मो मुख्यः। संस्कृतभाषा 'जीवने धर्मस्य प्राधान्यम्' उपदिशति। धर्मपालनेन ईश्वरभयम् हृदये सदा उदेति। तेन भयेन भ्रष्टाचारात् विरतो भवति मानवः। संस्कृत-भाषा सन्तोषामृतम् वितरति। परद्रव्यम् लोष्ठवत् वदति। तेन संस्कारेण संस्कृतं मानवं भ्रष्टाचारात् वारयति संस्कृतभाषा। अतः वदामि मनुष्यजीवने संस्कृतस्योपयोगम्। इदम् तत्त्वं तव हृदयेऽवतरति न वा रमेश !

रमेशः—सत्यम् भोः सुरेश ! अद्य संस्कृतस्योपयोगेन अहम् प्रबुद्धः। अवश्यम् पठिष्याम्यहम् संस्कृतम्।

सुरेशः—भारते संस्कृतभाषायाः यदि आवश्यकत्वम्, समस्त-प्रान्तानाम् सङ्घटनम् वाञ्छति नायकवर्गः। राष्ट्र-भाषायाः ( हिन्दीभाषायाः ) महाप्राणतां व्यापकतां यदि हिताय, स्वीकरोति तर्हि भारते भारतीयानाम् कृते संस्कृत-शिक्षा अवश्यम् अनिवार्यभूता करणीया।

रमेशः—अवश्यम् ! अवश्यम् !!

**अनुशीलनाय**—१. का आवश्यकता संस्कृताध्ययनस्य? किं वैशिष्ट्यं संस्कृते? जीवनोद्देश्ये, कः संस्कृतोपयोगः? किम् पुरुषार्थचतुष्टयम्? संस्कृताध्ययनेन कः लाभः? २. जीवनोद्देश्ये, संस्कृतस्योपयोगः, इत्यत्र, पठिष्याम्यहम्, एषु पदेषु सन्धिविग्रहं वद।

—०ः—

## प्रातः किमाचरेत्

सूर्योदयात् पूर्वम् शयनम् त्यजेत्। ततः हृदये इष्टदेवम् स्मरेत्। पश्चात् 'समुद्रवसने देवी' इति श्लोकम् पठेत्। अनन्तरम् जननीम् जनकम् ज्येष्ठबान्धवान् नमेत्। प्रणामे कराभ्याम् चरणौ एवम् स्पृशेत् येन दक्षिणकरः वन्दनीयस्य दक्षिणचरणे पतेत्, वामकरः तस्य वामचरणे। ततः ग्रामे ग्रामात् बहिः वने वा निर्जने स्थाने शौचालये नगरे शौचात् निवृत्तः हस्तौ शुद्धेन मृत्तिकाजलेन प्रक्षालयेत्। सरसेन दन्तधावनेन दन्तान् धावयेत्। जलेन स्नानम् आचरेत्। तदनु अंगोञ्छनेन शरीरम् प्रोञ्छयेत्। एवम् पीताम्बरम् शुष्कवस्त्रम् वा परिधरेत्। बद्धशिखः भस्म-भूषितः सन्ध्यावन्दनम् आचरेत्। गोदुग्धं पिबेत्, चणकेन गुडेन तुलसीदलेन वा जलम् पिबेत्। एतत् सर्वम् कार्यम् षड्वाद-नाभ्यन्तरे भवेत्। प्रातः ६ वादनात् ८ वादनम् यावत् पाठाभ्यासे लगेत्। पुस्तकम् रक्षेत् यथास्थानम्। विद्यालयाय यथावश्यकानि पुस्तकादीनि एकत्र रक्षेत् यथा विद्यालयगमनसमये न विस्मरेत्।

तदनन्तरम् करौ चरणौ मुखम् नासिकाम् प्रक्षालयेत्। ततः प्रसन्नचित्तः काष्ठासने उपविशेत् जलपात्रसहितः। तत्र परिवेषितम् अन्नम् नमेत् ईश्वराय अर्पयेत्। शनैः शनैः संयतः कवलस्य अन्नम् ३२ वारम् चर्वयेत्। भोजनान्ते मुखम् हस्तौ नेत्र-युगलम् नासिकाम् चरणौ जलेन प्रक्षालयेत्। पुनः तान् शुष्कव-स्त्रेण प्रोञ्छयेत्। कतिपयक्षणम् विश्रमेत्। ततः विद्यालयं चलेत्।

**अनुशीलनाय**—१. प्रातः उत्थाय किम् प्रार्थयेत्, कीदृशं दन्तधावनं हितकरम्? २. पीताम्बरम्, सूर्योदयः, शौचालयः, पाठाभ्यासः, पदेषु कः सन्धिः?

## वाहनानि







पूर्वकाले गजः, अश्वः, शकटः, गोरथः, अश्वरथश्चेत्यनेकप्रकाराणि वाहनान्यासन् भारते । महाराजाः गजैरश्वैः शकटैः-गोरथैरश्वरथैश्च गच्छन्ति स्म । श्रेष्ठिनो महाजना धनिकाश्च शकटैः शकटीभिश्च चलन्ति स्म । स्त्रीजनश्च शिविकया गच्छतिस्म ।

योद्धारः सैनिकाः रथारूढाः शत्रुभिः सह युध्यन्तिस्म। सामान्य-जनास्तु पद्भ्यामेव चलन्तिस्म।

साम्प्रतं नानाविधानि वाहनानि निर्मितानि सन्ति। तेषु सर्व-साधारणानां कृते सुलभा वर्तते वाष्पगन्त्री। अस्या अग्रे 'एंजिन' नामकमेकं यन्त्रं संलग्नं भवति। यस्यान्तः जलपूर्णं भवति। तच्च तीक्ष्णेनाग्निना तीव्रं प्रज्वलितं भवति। ततश्चोत्तिष्ठति वाष्प-समूहो वेगेन। तस्यैव बलेन 'एंजिन' यन्त्रे भवति प्रगतिः। तत्पृष्ठतो भवन्ति संयोजितान्यनेककोष्ठकानि। यानि धावन्ति वेगेन 'एंजिन' समाकर्षणेन। साधारणोऽपि जनस्तत्राऽरूढो भवति। स्वल्पेन भाटकेन शतशः क्रोशान् गच्छति। काशीतः कलकत्ताम्, कलकत्तातो मद्रासम् रेलगन्त्रीद्वारा गमनागमनं भवति सुलभम्।

'मोटरकार' गन्त्री चतुर्भिः चक्रैः विद्युद्बलेन चलति 'रेल' इव वेगेन। तत्र श्रीमन्तो धनिकाश्चलन्ति प्रचुरद्रव्यव्ययेन।

'वाइसिकिल' पादगन्त्री चक्रद्वयेन चलति। अस्याः चक्रे शकटस्येव न भवतः। अस्याः चक्रद्वयमेकस्यामेव पद्धतौ चलति। अस्य यानस्योपरि नियमत एक एव जनः चलति। यदा कदा द्वौ त्रयो वा जनाः समारूढा भवन्ति।

इमानि सर्ववाहनानि यन्त्रमयानि सङ्कटमयान्येव सन्ति। आरोहकस्य प्राणाः सदा सङ्कटपूर्णाः भवन्ति। भारतीयपुष्पक-

विमानस्य साम्मुख्ये एतेषां नास्ति किमपि वैशिष्ट्यम्। परन्तु 'भारतस्य' 'ते हि नो दिवसा गताः'

**अनुशीलनाय**—१. वर्तमानवाहनेषु कतिपयस्य नामानि वद ? बाष्पयन्त्रो कथं चलति ? भारते किम् यानम् सुलभम् ? २. 'वाहनान्यासन्, सङ्कटमयान्येव, शकटस्येव, यानस्योपरि, चोत्तिष्ठति' पदेषु कः सन्धिः ?

## गृहपरिष्कारः



शरीरस्य परिष्कारो यथा व्यक्तिसुखाय स्वास्थ्यकरो भवति तथा भवनस्य नगरस्य च स्वच्छताकरणं समष्टिहिताय

भवति साधकं परमोपयोगि च। साम्प्रतं भारतस्य ग्रामाणां मौलिकसौन्दर्यं क्षीणमिवास्ति। एतद्द विषये कारणं यद्द भवेत् वा तद्द भवेत्। परं सम्प्रति ग्रामेषु स्वच्छता स्वाभाविकी न वर्तते। नगरे यथा भवति स्वच्छताप्रबन्धस्तथा ग्रामेषु न भवति। आधुनिको ग्रामीणो निजग्रामस्य स्वच्छताकरणस्य चिन्तनात् भवति उदासीनः। कष्टं सहमानोऽपि तस्य दृष्टिर्न पतति परमावश्यके कार्येऽस्मिन्। तेन रोगमुक्तेषु भारतस्य ग्रामेषु रोगाणां वसतिमिव गृहं पश्यामि। ग्रामस्य सङ्कीर्णमार्गे गृहस्य परनालजलं मलिनं व्याप्तं भवति। तेन ग्रामेऽपि 'मलेरिया' ज्वरः उत्पन्नो भवति, तत्र उत्पततां मशकानां संसर्गः एव प्रधानं कारणम्।

तस्मात् शरीरवत् गृहस्यापि परिष्कारः परमावश्यकः। ग्रामीणजनाः स्वस्वगृहस्य परिष्कारे भवन्तु पूर्णसावधानाः। यद्यत्र गृहपरिष्कारे ग्रामीणाः भविष्यन्ति सावधानाः तदा ग्रामस्य परिष्कारे स्वच्छताकरणे न भवति किमपि काठिन्यम्। एतदर्थम् एते नियमाः पालनीया भविष्यन्ति। एतस्मिन् चित्रे महिलाः स्वगृहस्य चत्वरम् लिम्पन्ति गोमयेन। १ प्रतिदिनं प्रातः स्वस्वगृहं परिमार्जनीयम्। २ गृहस्य वहारणं (अवहारणम्) गृहात् बहिः नियते स्थाने त्यजेत्। ३ पुरुषाः शौचाय ग्रामाद्द बहिर्दूरं गच्छेयुः। महिलावर्गो गृहाभ्यन्तरशौचालये वा ग्रामस्यैव

नियते स्थाने शौचालये वंशवाटीं वा गच्छेत् । प्राचीनकालवत् शूकरैः परिष्कारो भवेत् वा ग्रामस्य स्वास्थ्यसमितिद्वारा स्वच्छताप्रबन्धो भवेत् । ४ गृहस्य वहारणं गृहस्य कोणे न स्थापयेत्, न वा गृहाद् वहिर्यत्र कुत्र वा प्रक्षिपेत् । वहारणसङ्ग्रहस्य स्थाने क्षिपेत् । ५ प्रतिपक्षं वा प्रतिमासं गृहस्य भीत्तिं भूतलञ्च गोमयेन मृत्तिकया च प्रातः लिम्पेत् । ६ कूपस्योद्गाहः प्रतिवर्षं भवेत् । सर्वे ग्रामीणा ग्रामपरिष्कारे सावधानास्तत्परा यदि भवेयुः तदा कार्यमिदं सरलतया भवेत् । गृहस्य वस्तून्यखिलानि यथास्थानं रक्षेत् । यत्र तत्र न विकीर्णानि भवेयुः ।

अनुशीलनाय—

१. गृहपरिष्कारात् को लाभः? गृहपरिष्कारः कथं भवति? वहारणं कुत्र प्रक्षिपेत्?
२. यद्यत्र वस्तून्यखिलानि, 'परमोपयोगी, शौचालयः, कूपस्योद्गाहः, इत्यत्र' कः सन्धिः?



## सुभाषितम्

यदि न स्यान्नरपतिः सम्यङ् नेता ततः प्रजा ।
अकर्णधारा जलधौ विप्लवेतेह नौरिव ॥ १ ॥

स्पृशन्नपि गजो हन्ति जिघ्रन्नपि भुजंगमः ।
पालयन्नपि भूपालः प्रहसन्नपि दुर्जनः ॥ २ ॥

उद्यतेष्वपि शस्त्रेषु दूतो वदति नान्यथा ।
सदैवावध्यभावेन यथार्थस्य हि वाचकः ॥ ३ ॥

यस्य नास्ति स्वयं प्रज्ञा शास्त्रं तस्य करोति किम् ?
लोचनाभ्यां विहीनस्य दर्पणः किं करिष्यति ? ॥ ४ ॥

प्रणयादुपकाराद्वा यो विश्वसिति शत्रुषु ।
स सुप्त इव वृक्षाग्रात् पतितः प्रतिबुध्यते ॥ ५ ॥

आदानस्य प्रदानस्य कर्त्तव्यस्य च कर्मणः ।
क्षिप्रमक्रियमाणस्य कालः पिबति तद्रसम् ॥ ६ ॥

सङ्गः सर्वात्मना त्याज्यः स चेत् त्यक्तुं न शक्यते ।
स सद्भिः सह कर्त्तव्यः सतां सङ्गो हि भेषजम् ॥ ७ ॥

दिव्यं चूतरसं पीत्वा न गर्वं याति कोकिलः ।
पीत्वा कर्दमपानीयं भेको भकभकायते ॥ ८ ॥

अगाधजलसञ्चारी न गर्वं याति रोहितः ।
अङ्गुष्ठोदकमात्रेण शफरी फरफरायते ॥ ९ ॥

हितोपदेशं श्रुत्वा तु कुर्वीत च यथोचितम् ।
विदुरोक्तमकृत्वा हि शोच्योऽभूत् कौरवेश्वरः ॥ १० ॥

गुरुमाराधयेत् भक्त्या विद्याविनयसाधनम् ।
रामाय प्रददौ तुष्टो विश्वामित्रोऽस्त्रमण्डलम् ॥ ११ ॥

न पुत्रायत्तमैश्वर्यं कार्यमार्यैः कदाचन ।
पुत्रार्पितप्रभुत्वोऽभूत् धृतराष्ट्रस्तृणोपमः ॥ १२ ॥

परमात्मानमन्तेऽन्तर्ज्योतिः पश्येत् सनातनम् ।
तत्प्राप्त्या योगिनो जाताः शुकशान्तनवादयः ॥ १३ ॥
अन्ते सन्तोषदं विष्णुं स्मरेद्धन्तारमापदाम् ।
शरतल्पगतो भीष्मः सस्मार गरुडध्वजम् ॥ १४ ॥
जन्मावधि न तत् कुर्यादन्ते सन्तापकारि यत् ।
सस्मारैकशिरः शेषः सीताक्लेशं दशाननः ॥ १५ ॥
गुणस्तवेन कुर्वीत महतां मानवर्धनम् ।
हनूमानभवत् स्तुत्या रामकार्यभरक्षमः ॥ १६ ॥
कुर्वीत सङ्गतं सद्भिर्नासद्भिर्गुणवर्जितैः ।
प्रायः राघवसङ्गत्या प्राज्यं राज्यं विभीषणः ॥ १७॥



## अस्माकम् स्वदेशः

अहो ! एतत् पुरतः अस्माकम् भारतदेशस्यापूर्वम् चित्रम् । अहम् बद्धाञ्जलिना नतमस्तकेन नमामि निश्छलहृदयेन स्मरामि, संस्कृतवचनेन वन्दामि तम् । पुरा यस्मिन् देशे महामहिमशाली राजाधिराजः सम्राट् भरतः अवतरितः लोकोत्तराम् ख्यातिम् उपार्जयत् । यस्य भारतस्य महात्म्येन प्रभाविताः देवाः अपि स्वर्गं विहाय भारते वासम् वाञ्छन्ति । सः स्वर्गदेशः कथम् न वन्दनीयः ! कथम् न स्पृहणीयः !! बहुभिः महर्षिभिः राजर्षिभिः

महात्मभिः विद्वद्भिः धनिकैः बलिष्ठैः चायम् भारतदेशः सर्वात्मना पूर्णः सम्पन्नः। एतस्मिन् देशे भगवान् स्वयम् मानवरूपेणावतरतिस्म। संसारस्यादिकविः वाल्मीकिः मुनिः, पुराणाचार्यः व्यासदेवः, नाट्याचार्यः भासः, कवीशः कालिदासः अनेकशः कवयः प्रादुरभवन्। भक्तशिरोमणिः प्रह्लादः, ज्योतिष्मार्तण्डः वराहमिहिरः, आयुर्वेदप्रवर्त्तकाः धन्वन्तरिसुश्रुतचरकादयः, नैयायिकाः काणादाः, वैयाकरणाः पाणिनिकात्यायनपतञ्जलयः, दार्शनिकः श्रीशङ्कराचार्यः, वीरव्रतिनः राणाप्रतापः शिवाजी गुरुगोविन्दसिंहः, देशसुधारकाः महात्मागान्धी महामनाः मालवीयः, विश्वकवीन्द्रः रवीन्द्रः च यस्मिन् देशे अभवन् तस्य देशस्य गौरववर्णने कः पारयिष्यति ?

नास्ति एतादृशः कश्चन देशः संसारे। देवी प्रकृतिः स्वयम् एतस्य सौन्दर्यदुर्गे कश्मीरे सुखेन निवसति। अखिलविभवविलासपूर्णः देशोत्तमः भारतदेशः एषः पुरुषोत्तम इव विलसति। अस्य मस्तकोपरि हिमालयः कटिदेशे विन्ध्याचलः पादमूले भारतसागरः स्नायुपुञ्ज इव ब्रह्मपुत्रः, गङ्गायमुनासरयूप्रभतयः नद्यः जलेन मृत्तिकया च भारतभूमिं सजलां सुफलां सफलयन्ति। तेन एषः भारतदेशः विश्ववन्द्यः।

अस्माकम् एषः लोकोत्तरः देशः बहोः कालात् पारतन्त्र्यदुःखम् अनुभवन् साम्प्रतम् स्वतन्त्रः अभवत् दैवयोगात्। यद्यपि

स्वतन्त्रे देशे अस्मिन् स्वतन्त्रदेशवत् वस्तूनाम् स्वातन्त्र्यसुखम् नानुभवामः अधुना। यतः पूर्वविकृतिसुधारात् नावकाशो मिलति। नापि साधनसौलभ्यम् एव भारते येन सकलवस्तुसुखसौलभ्ये भवेयुः सफलाः देशोन्नायकाः। किन्तु तद् दिनं नास्ति दूरम् यत्र स्वतन्त्रभारतः विश्वस्य स्वतन्त्रराष्ट्रेषु निजस्थानम् शीघ्रम् एव लभेत। अतश्चास्माकं भारतीयानाम् विशेषतया छात्राणाम् कर्त्तव्यं प्रधानम् अस्ति यत् एतस्य स्वदेशस्य कीर्तिपताका पूर्ववत् संसारे निरन्तरं स्फुरतु।

**अभ्यासाय**—अत्र दर्शय दीर्घसन्धिगुणसन्धिपदानि तेषाम् विग्रहम् च।



## काशीनगरी





एषा काशी नगरी चित्रे। याम् वाराणसीम् आनन्दवनम् वदति लोकः। सा गङ्गानद्याः पावने विशाले दक्षिणतटे वसति। गङ्गानदी गङ्गोत्तरीशिखरात् निर्गता हरिद्वारम् गढमुक्तेश्वरम्

कर्णपुरम् प्रयागम् पावयन्ती काशीम् समागच्छति । अत्र गङ्गा-तटस्य दृश्यम् अतिमनोहरम् । स्थाने स्थाने प्रस्तरनिर्मिताः घट्टाः ताम् मनोहरताम् नितराम् वर्धयन्ति । तत्र सायं प्रातः जनाः गच्छन्ति, मज्जन्ति, क्रीडन्ति, तरन्ति, उपविशन्ति, अर्चन्ति च। तत्र केचन आचामन्ति, जपन्ति, बहवः गायन्ति, अपरे च जल्पन्ति, इतरे भ्रमन्ति वायुसेवनाय । अनेके नौकया विहरन्ति । काश्याम् गङ्गायाम् कोऽपि मत्स्यम् न मारयति । घट्टेषु राजघट्टः ब्रह्मघट्टः, पञ्चगङ्गाघट्टः मणिकर्णिकाघट्टः, ललिताघट्टः, मीरघट्टः, दशाश्वमेधघट्टः, केदारघट्टः हरिश्चन्द्रघट्टः, तुलसी-घट्टः, असीघट्टः, प्रसिद्धाः सन्ति । देशिनः विदेशिनः कलाकाराः नौकारूढाः काशीघट्टानाम् चित्राणि कर्षन्ति । उत्तरप्रदेशीय-शासनम् तेषाम् काशीघट्टानाम् जीर्णोद्धाराय करोति प्रयत्नम्। यदि एतेषाम् घट्टानां भवेत् जीर्णोद्धारः, तदा काशीशोभा द्विगुणतरा भविष्यति ।

काशी मन्दिराणाम् खनिः । येषु आदिविश्वेश्वरमन्दिरम् श्रीविश्वनाथमन्दिरम् अन्नपूर्णामन्दिरम् , कालभैरवबटुकभैरवयोः मन्दिरम् , दुर्गामन्दिरम् , केदारेश्वरमन्दिरम्, सङ्कटमोचनमन्दि-रम्, गोपालमन्दिरम् वागीश्वरीलक्ष्मीसङ्कटामन्दिराणि प्रसिद्धानि सन्ति। यत्र दर्शनाय दूरदूरदेशेभ्यः आगच्छन्ति दर्शनार्थिनः।

अत्र अनेके सत्राः चलन्ति राज्ञाम् महाराजानाम् श्रेष्ठिनाम् च ।

काशी संस्कृतविद्यानाम् केन्द्रभूता अस्ति । यद्यपि प्राचीनकाले यावन्तः संस्कृतविद्यालयाः आसन् , तावन्तः नाधुना सन्ति, तथाप्यत्र राजकीयसंस्कृतमहाविद्यालयः, साङ्गवेदविद्यालयः, गोयनकामहाविद्यालयः, मारवाड़ीकालेजः, सोयलकाविद्यालयः, सन्न्यासिसंस्कृतपाठशाला, सरयूपारीणपाठशाला, कान्यकुब्ज पाठशाला रणवीरसंस्कृतपाठशाला, दाऊजी पाठशाला, बिरला विद्यालयः, अग्रवालमारवाड़ीविद्यालयश्च मुख्यतया सन्ति । आङ्गल विद्यालयेषु हिन्दुविश्वविद्यालयः, क्विंसकालेज, जे० पी० मेहता, उदयप्रतापकालेजः, डी० ए० वी० कालेज, हरिश्चन्द्रकालेजः, गुर्जरपाठशाला, अग्रवालविद्यालयः, सनातनधर्मविद्यालयः, बंगालीटोला, ऐंग्लोबंगाली कालेजः, सेन्ट्रलहिन्दुस्कूलः, हिन्दुकन्याविद्यालयः, दुर्गाचरणकन्या विद्यालयः, वसन्तकालेजः, काशीविद्यापीठः, जयनारायणविद्यालयश्च मुख्यतया सन्ति । पुस्तकालयेषु च संस्कृतभाषायाः सरस्वतीभवनम् , अच्युत पुस्तकालयः, हिन्दी भाषायाश्च नागरीप्रचारिणीसभा, कारमाइकेल लाइब्रेरी, तुलसीपुस्तकालयश्च प्रसिद्धाः पुस्तकालयाः ।

गङ्गायाः वामतटे धर्मप्राणकाशीनरेशस्य रामनगरम् विलसति । यत्र महाराजस्य प्रासादः दुर्गश्च दर्शनीयः ।

**अभ्यासाय**—१. काशी कस्याः नद्याः तटे अस्ति ? तत्र के मुख्याः घट्टाः ? के मुख्याः विद्यालयाः, संस्कृतपुस्तकालयाः, च हिन्दीपुस्तकालयाः ? कानि मन्दिराणि ?

२. यद्यपि, तथाप्यत्र, कः सन्धिः ?

## रामायणम्

संस्कृते रामायणस्य रचयिता आद्यकविः महर्षिः वाल्मीकि-मुनिः आसीत् । तदनुसारम् अध्यात्मरामायणम् अद्भुतरामायणम् इति अनेकरामायणम् रामचरितनिबद्धम् संस्कृते अलिखन् महाकवयः । हिन्दीभाषायाञ्चापि रामचरितम् रामायणम् अलिखत् महात्मातुलसीदासः । एतेषाम् रामायणानाम् कथाना-यकः रघुवंशशिरोमणिः मर्यादापुरुषोत्तमः भगवान् रामचन्द्रः । यस्य जन्मभूमिः राजधानी च अयोध्यानगरी । या अद्यापि सरयूनदीतीरे स्थिता वर्तते । यद्यपि रघुवंशे बहवः महाराजाः अभवन्, परन्तु भगवता श्रीरामचन्द्रेण सदृशः नैकोऽपि अभवत् । महाराजदशरथस्य पुत्रेषु एषः श्रीरामचन्द्रः ज्येष्ठः श्रेष्ठश्च सर्वा-त्मना । सर्वदैव सर्वथैव मर्यादापुरुषोत्तमः श्रीराघवेन्द्रः परमोन्नतः परमैश्वर्यश्च लोके । स च स्वजीवनस्य परमौदार्यं परमौत्कर्ष्यं प्रतिक्षणम् अदर्शयत् । अभिषेकावसरे भरतमातुः कैकय्याः प्रसा-दाय पितृचरणस्य राजाधिराजस्य महाराजस्य दशरथस्यादेशेन पुरुषोत्तमः भगवान् श्रीरामचन्द्रः स्वस्य भार्यया सीतया अनुजेन

लक्ष्मणेन च सह सहर्षं दण्डकारण्यम् आगच्छत् अवसत् च चतुर्दशवर्षाणि च वनौकसाम् मध्ये ।

एकदा दुर्दैवात् मारीचसाहाय्येन लङ्कापतिः रावणः यदा अहरत् भगवतीम् सीतादेवीम् तदा तस्याः अन्वेषणाय वानराणाम् सहयोगेनैव लङ्कास्थितान् राक्षसान् रावणञ्च भीषणयुद्धे हतवान् स चैकाकी । द्वादशवर्षानन्तरञ्चैषः भगवान् रामचन्द्रः लक्ष्मणेन सीतया सह सानन्दम् पुष्पकविमानेन परावृत्तः मातृभूमिम् । परावर्तने महावीरः वानरेन्द्रः सुग्रीवः राक्षसेन्द्रः विभीषणश्च सङ्गताः आसन् । एतत् सर्वम् चरितम् रामायणे लिखितम् वर्तते सविस्तरम् ।

| | | | | | | |
|---|---|---|---|---|---|---|
| नैकः | = | न + एकः | = | अ + ए | = | ऐ |
| सर्वदैव | = | सर्वदा + एव | = | अ + ए | = | ऐ |
| परमैश्वर्य | = | परम + ऐश्वर्य | = | अ + ऐ | = | ऐ |
| वनौकः | = | वन + ओकः | = | अ + ओ | = | औ |
| परमौदार्यम् | = | परम + औदार्यम् | = | अ + औ | = | औ |

## वृद्धिरेचि

अकार या आकार से परे ए, ऐ, ओ, औ हो तो ए या ऐ के साथ मिलकर ऐ और ओ या औ के साथ मिलकर औ होता है । एवम् ।

एक + एकः, जन + ऐक्यम्, विद्या + एका, विद्या + ऐश्वर्यम्; जल + ओघः, धन + औत्कण्ठ्यम्, गङ्गा + ओघः, विद्या + औत्कर्ष्यम्' इत्यादि ।

---

## कतिपयनाटकदृश्यम्

( १ )

( पुस्तकालये रमेशः उपविश्य लिखति, प्रविशति च गिरिराजः )

गिरिराजः—( प्रविश्य ) वन्दे रमेशम् ।

रमेशः—शुभमस्तु गिरिराज ! कुशलम् ? कुतः आगमनम् ?

गिरिराजः—प्रयागात् ।

रमेशः—प्रयागे कथं गमनम् ?

गिरिराजः—तत्र छात्रसङ्घस्य महाधिवेशनमासीत् ।

रमेशः—किं जातं तत्र ?

गिरिराजः—छात्राणां सङ्घटनमेव मुख्योद्देश्यमासीत् छात्राधिवेशनस्य ।

रमेशः—किमर्थं छात्राणां सङ्घटनम् ?

गिरिराजः—विद्यालयानां विधाने नियमने छात्राणामपि अधिकाराय

रमेशः—रोगिणः चिकित्सकस्य निदाने विधानेऽनुपाने लब्धाधिकाराः यथा मृत्युं वाञ्छन्ति, तथैव छात्राणां प्रवृत्तिः नेतृत्वमनोवृत्तिरियं वा भारतस्य स्वातन्त्र्यं विकर्त्तुं प्रभविष्यति गिरिराज ! विदेशीयशासनोन्मूलनकाले नेतारो मर्यादोल्लङ्घने कापथे छात्रान् प्रेरितवन्तो यत्तेनैवाद्य स्वदेशशासनेऽपि चानुकुर्वन्ति तदनुयायिनश्छात्राः । भारतस्य 'मातृदेवो भव,

पितृदेवो भव, आचार्यदेवो भव' इति लोकोत्तरा आदर्शपद्धतिर्नाद्यापि विलोक्यते क्वापि स्वदेशे ! तेन तद्विपरीतं परिणामं पश्यामि सर्वत्र । तद्विचार्य वाणी रुध्यते, कण्ठं शुष्कायते, हृदयं कम्पते नितराम् इति सत्यं न वा गिरिराज ?

गिरिराजः—'इति' तु सत्यं भद्र ! किन्तु :—

रमेशः—'किन्तु' इति किं गिरिराज ?

गिरिराजः—इत्येव यत् छात्राः पाठ्यक्रमानुसारं कक्षायां राजनीतिविषयं संसदीयविधानञ्च पठन्तु, परीक्षाभवने तद्गतप्रश्नान् उत्तरयन्तु । किन्तु लोके तत्प्रयोगात्मकं ज्ञानं नार्जयन्तु इति कथम् सङ्गच्छते ? त्वमेव वद रमेश ! प्रयोगात्मकज्ञानेन विना राजनीतेः प्रौढज्ञानं कथं सम्भविष्यति ? राजनीतौ प्रयोगपरिज्ञानदुर्बलाः छात्राः नागरिकाः भूत्वा किं करिष्यन्ति ? अहन्तु न जाने रमेश !

रमेशः—राजनीतेः प्रौढपरिज्ञानोपायम् अहं जानामि ! त्वमपि जानासि गिरिराज ! राजनीतेः प्रौढपरिज्ञानं भृशमागमिष्यति राजनीतिशास्त्रस्य प्रौढाभ्यासेनैव। सोऽभ्यासः प्रौढो भवति अध्ययनकाले छात्रावस्थाया-

मध्ययनेनैव । अध्ययनकाले बुद्धेः एकतानता अपेक्ष्यते । अस्मिन् विषयचिन्तनग्रहणकाले पदेपदे सन्देहो जागर्ति, गुरूपदेशेन तद्वारणं भवति । अस्मिन् समये बुद्धिर्विविधझञ्झानिले पतति यदा तदा विचारविमर्शशक्तिः क्षीणतां गच्छति । तदानीं बुद्धिस्तर्कप्रधाना भवति । या तर्कबलेन परपक्षखण्डने स्वपक्षमण्डने च प्रसरति । प्रसरणेन यथा जलस्य गाम्भीर्यं नश्यति तथैव खण्डने मण्डने च बुद्धिः प्रसरति । बुद्धेः प्रसरणेन ज्ञानगाम्भीर्यं नश्यति गिरिराज ! अध्ययनकाले मितवाग् अपेक्ष्यते । वाक्संयमो बुद्धेर्गाम्भीर्याय वैशद्याय च यथा श्रेयस्करो, न तथा नेतृत्वमनोवृत्तिः । एतद्द रहस्यं नेतार एव न जानन्ति किमुत तत्प्रभाविताश्छात्राः । तेनैव मर्यादाविरुद्धं कार्यं कर्त्तुं प्रवर्तन्ते छात्राः कोमलमतयः ।

गिरिराजः—साधु ! साधु !! मन्ये भवतां तात्त्विकं मतमिदम् । न गमिष्यामि न वदिष्यामि च छात्रसङ्घस्य सङ्कटनाय रमेश ! वस्तुतो नायं प्रकारः प्रशस्तः श्रेयस्करश्च छात्राणामिति साम्प्रतं परिज्ञातम् ।

( २ )

उद्याने

( उपविश्य तरुतले गिरिराजः कागदपत्रं पश्यति )

गिरिराज.—अरे रामदीन ?

रामदीनः—( प्रविश्य ) आज्ञापयतु देव ।

गिरिराजः—रामदीन ! गत्वा महेशप्रसादं निवेदय यदहं द्रष्टुमिच्छामि ।

रामदीनः—यथाज्ञापयति देव ! ( निःसृत्य पुनः महेशप्रसादेन सह प्रविशति )

रामदीनः—महेशप्रसादः समायातः देव !

गिरिराजः—समायातः ? प्रवेशय तम् ।

महेशः—( प्रविश्य ) वन्दे गिरिराजम् ।

गिरिराजः—अहो महेशः ? वन्दे वन्दे । उपविश ।

महेशः—( आसन्द्यामुपविशति ) वद तत्रत्यवृत्तम् ।

गिरिराजः—तदर्थमेव भवन्तमाकारितवान् ।

महेशः—किमभवत्तत्र ?

गिरिराजः—तत्र तु परमशोभनम् ।

महेशः—'तु' इति सन्दिह्यति ।

गिरिराजः—महेशप्रसाद ! अनेन छात्रसङ्घेन छात्राणां नोपकारो भवितुमर्हति । वस्तुतोऽनेन छात्रेषु विधिविधानभङ्गाय

मनोवृत्तिर्वर्धते यन्न पश्यन्ति नेतारो युवानश्छात्राश्च । श्रीमतः सुरेशमहाशयस्यापि इदमेव मतम् ।

महेशः—हुं, स्वमतमेव वद । तस्यैव मूल्यं मद्विचारे । सुरेशशर्मा यद् वदति, विचारयति, विचारयिष्यति वा तत्सर्वं जानामि गिरिराज ! नात्र व्याख्यानमपेक्ष्यते ।

गिरिराजः—न न ! त्वं पुनः विचारय महेश ! श्रीसुरेशदेवो बहुश्रुतो बहुज्ञो मनीषी। त्वमहञ्च तद्विचारगाम्भीर्यतलं न स्पृशावः । पश्य, वर्तमानकोलाहलात् पद्मपत्रमिव कीदृशोऽसम्पृक्त आस्ते सः । तस्य मनस्यगाधे यदास्ते तदेव मुखान्निःसरति, तदेव च कर्मण्यपि पश्यामः । वस्तुतो मनस्येकं वचस्येकं महात्मनो लक्षणं सुरेशमहाशये विलोक्यते महेश ! नान्यत्र ।

महेशः—भवतु । अतः परं भवतां कः कार्यक्रमः ?

गिरिराजः—मम कार्यक्रमः ?

महेशः—अथ किम् ?

गिरिराजः—छात्रसङ्घस्य कृते ?

महेशः—एवम् ।

गिरिराजः—छात्रसङ्घस्य सङ्घटनात्मको मम कार्यक्रमः स्थगितो भविष्यति ।

महेशः—भविष्यति, भवतु वा मम का चिन्ता ? छात्रसङ्घस्य त्वमेव जनको नायकश्च । अहन्तु तवादेशाधीनः प्रचारस्य कार्यभारं वोढुं कृतसङ्कल्पः आसम् । साम्प्रतं यदि त्वमेव तस्य स्थगने तत्परोऽसि तदा मम कृते तु कोऽप्यत्र प्रश्न एव नोपतिष्ठते ।

गिरिराजः—इतः परम् आषाढस्य १५ दिनाङ्के छात्रसङ्घस्य कार्य-कारिण्याः विशेषाधिवेशनं कर्त्तुं श्वः सूचयिष्यामि वृत्तपत्रैः । तत्कृते वक्तव्यमिदं लिखितं वर्तते ।

( ततो महेशहस्ते ददाति पत्रम् )

महेशः—यद्व रोचते तुभ्यम् । मत्तस्त्वमधिकतरो बुद्धिमान् दूर-दर्शी च । दिवसं भ्रान्तस्य रात्रौ गृहागमनं शोभन-मेव, नाशोभनम् । दुराग्रहश्च सार्वजनिकक्षेत्रे वस्तुतः हितं बाधते गिरिराज ! अहमप्यद्य तव निश्चयं समर्थयामि ।



## कालिदासः

महाकविः कालिदासः संस्कृतसाहित्ये प्रमुखः कविरभवत् । यद्यपि संस्कृतसाहित्ये वाल्मीकिरादिकविस्ततो व्यासः प्रसिद्धोऽस्ति । परं, तदतिरिक्तेषु कविषु प्रधानकविः कालिदास एवास्ति निजकाव्यकौशलेन । महाकवेरस्य कालिदासस्य विवाहे वर्तते जनश्रुतिरेका–यदयं रूपवानपि निरक्षरभट्ट एवासीत् । दैवात् राजकन्यया विद्योत्तमया सहास्य विवाहोऽभवत् । 'मूर्खोऽयमिति यदा तस्या बोधोऽभवत्तदा तयाऽपमानितः कालिदासो विद्योपार्जने संलग्नोऽभवत् । किशोरः कालिदासो मूर्खोऽपि यौवने कालीवरदानेन कुशलः कविरभवत् । ततः एकदा कालिदासो यदा स्वगृहस्य द्वारमुपस्थितश्चाकारयत्–अनावृतकपाटं द्वारं देहि । गृहाभ्यन्तरादवदत् विद्योत्तमा 'अस्तिकश्चिद्वाग्विशेषः ? तदा सारस्वतशक्तिसम्पन्नः कालिदासो विद्योत्तमायाः वाक्यस्यैकैक पदेन चैकैकमहाकाव्यमलिखत् । 'अस्ति' पदेन कुमारसम्भवमहाकाव्यं 'कश्चित्' पदेन मेघदूतं खण्डकाव्यम् 'वाग्' पदेन रघुवंशमहाकाव्यं रचितमस्ति । ततश्चास्य शाकुन्तलं मालविकाग्निमित्रम् ऋतुसंहारम् विक्रमोर्वशीयञ्च नाटकानि प्रसिद्धानि ।

काव्यकौशलेनैव लोकः कालिदासं कविगुरुं वदति । वस्तुतः उपमादाने प्रकृतिवर्णने वस्तुचित्रणे च कालिदासस्य लोकोत्तर-

प्रतिभा काव्यरसेन कं रसिकं न मोहयति । तेनैव संसारे नास्ति कापि भाषा, यस्यां कालिदासस्य काव्यानां नाभवत् अनुवादः । पाश्चात्य देशेऽपि कालिदासस्य तस्य ग्रन्थानाञ्च महान् आदरो वर्तते ।

धन्योऽयं कालिदासः ! धन्यश्च तस्य काव्यकौशलम् !! धन्या च देववाणी, यत्राभवत् कालिदासो विश्ववन्दनीयो महाकविः ।

अनुशीलनाय—

१. कालिदासः कः? तस्य ग्रन्थाः के? किञ्च तस्य वैशिष्ट्यम्? भार्यायाः किंनामास्ति?

२. एकैकपदेन, एकैकमहाकाव्यम्, कौशलेनैव, तेनैव पदेषु सविग्रहं सन्धिं वद ।



## हिमालयः

प्रकृतिप्रभावात् मृत्तिकाप्रस्तरकणमेलनेन पर्वतः उत्पन्नो भवति । पर्वतं शैलं नगमचलं गिरिञ्च वदति लोकः । पर्वतात् जलप्रवाहो योऽधस्तात् पतति स निर्झरो झरो वा ख्यातोऽस्ति लोके । नदीनदोऽपि निर्झरात् निःसरति । संसारे पर्वतेषु हिमालयः सर्वोन्नतो विशालः पर्वतोऽस्ति । तेन हिमालयः पर्वतराजः प्रसिद्धोऽस्ति सर्वत्र । पर्वतराजोऽयं भारतस्य उत्तरदिशायां समर्थः प्रहरीव भारतस्य संरक्षकः पोषकश्चास्ति । तेन ततः भारते बाह्याक्रमणं न भवति। हिमालयस्य शिखरं प्रायः सदा हिमाच्छादित

भवति । गङ्गायमुनासरयूब्रह्मपुत्रादिनदीनदा हिमालयादेव निःसरन्ति । ततश्च विन्ध्याचलोऽपि हिमालयस्य समानान्तरं पूर्वसागरात् पश्चिमसागरं यावत् विस्तीर्णोऽस्ति ।

हिमपातस्य बाहुल्यात् शैत्यमधिकं भवति हिमालये । तेन ग्रीष्मकाले बहवो जनाः स्वास्थ्यलाभाय तत्र गच्छन्ति । तन्नगरेषु हरिद्वारः ऋषिकेशो बदरिकाश्रमस्तीर्थस्थानानि नैनीतालं शिमला देहरादूनमसूरी च नवीननगराणि प्रसिद्धानि । भुवालीति तत्र वर्तते स्थानमेकं यत्र क्षयरोगस्य वर्तते एकश्चिकित्सालयः । हिमालयस्य प्रकृतिसौन्दर्यं लोकोत्तरमस्ति संसारे । हिमालयः ओषधिमपूर्वं काष्ठञ्च नानाविधं प्रस्तरञ्च बहुमूल्यं वितरति । हिमालये एव कैलाशोऽस्ति, यत्र भगवान् शङ्करः निवसति । अस्य पर्वतस्यान्वेषणे अनुसन्धाने च पाश्चात्यवैज्ञानिकाः संलग्नाः सन्ति ।

### अनुशीलनाय—

१. संसारे कः पर्वतानां राजा? ब्रह्मपुत्रनदः कुतो निःसरति? हिमालयात् भारतस्य को वास्ति लाभः? पर्वतेषु कति मुख्यनगराणि ।

२. भुवाली—कुत्रास्ति? तत्र कस्यरोगस्य चिकित्सा भवति?

## महामना मालवीयः

वर्तमानकाले को वा विद्वानस्ति यो महामनसः पं० मदनमोहनमालवीयस्य नाम्ना परिचितो न स्यात्। प्रयागे मालवीयब्राह्मणकुले पण्डितपरिवारे १८६१ ख्रीष्टाब्दे महामनसोऽभवत् प्रादुर्भावः। समाजस्य राष्ट्रस्य विशेषतया धर्मस्य च सेवाक्षेत्रे शैशवादेवास्य प्रबला मनोवृत्तिः। या तस्य जीवने सदा प्रतिभातास्ति। पण्डितकुलोत्पन्नस्यापि बालकमालवीयस्याङ्ग्लभाषाध्ययनेऽपि लालसाऽभवत्। आङ्ग्लभाषाध्ययनेन सह संस्कृतभाषाध्ययनेऽपि स प्रवृत्तः। तेनाङ्ग्लभाषया सह संस्कृतसाहित्येऽपि प्रावीण्यं प्राप्तवानयं स्वविद्यार्थिजीवने। तदानीन्तनेषु वाकीलेषु स्वख्यातिमस्थापयत् परन्तु तत्र मालवीयस्य रुचिर्न संलग्नेति समाजहिताय राष्ट्रोद्धाराय च स बद्धपरिकरोऽभवत्।

विद्याबुद्धेर्वैलक्षण्ये नवीनोऽपि महामनाः कुलपरम्परायाः पालने परमप्राचीन इव स्थित आसीत्। धवलपीतवस्त्रातिरिक्तं नान्यत् वस्त्रमधारयत् स देशे विदेशेऽपि। विलायते सम्पन्नायां 'गोलमेज कान्फ्रेंस' नामक परिषदि गतस्य महामनसः कृते हरिद्वारात् गङ्गाजलस्य प्रेषणाय प्रतिसप्ताहं तत्र जलयानद्वारा प्रबन्धः कृतः आसीत्। तस्य ज्योतिर्मये ललाटे चन्दनस्य तिलकं कस्य भारतीयस्य कृते गौरवगर्वविषयो नासीत्। तस्य बाह्याभ्यन्तरमेकरूपमासीत्। प्रजानृपयोः प्रीतिपात्रता वस्तुत एकत्र दुर्लभाऽपि महामनसि मालवीये सुलभैवासीत्। यदा यदा कांग्रेसेन सह गोरण्डानां सङ्घर्षोऽभवत्तदा तदा चोभयोः प्रस्तावेन महामना एव

मध्यस्थो भवति स्म। तस्य निर्णय उभयोः अपि मान्यो भवति स्म। मालवीयस्य धर्मशास्त्राणां गभीराध्ययनं प्राचीनार्वाचीन-( प्राच्यप्रतीच्य ) राजनीतेर्लोकोत्तरसूक्ष्मदर्शनं लेखनेऽप्रतिम पाण्डित्यं भाषणे च जनानां मन्त्रमुग्धकारिणी वाग्मिता प्रकृत्यैव प्राप्ता आसीत्।

कांग्रेससभायां हिन्दुसभायां सनातनधर्मसभायां चापि तस्य भाषणेन जना हर्षोल्लसिता भवन्ति स्म। तस्य विद्याव्यसनं परमप्रशंसनीयमासीत्। मालवीयमहोदयः जीवनस्य पूर्वार्द्धे यदि प्रयागे प्रयागविश्वविद्यालयस्यान्तर्गतं हिन्दुछात्राणां कृते हिन्दु छात्रावासं निर्मितवान् तदा चोत्तरार्द्धे काश्यां हिन्दुविश्वविद्यालय-मस्थापयत्। विश्वविद्यालयस्यैकैका इष्टका महामनसो मालवीयस्य कीर्तिस्तम्भं स्मारयति। यो हि मालवीयो भारतस्याधिकारिवर्गस्य सम्मुखे हिमालयवत् कठोर आसीत् स एव संस्कृत-पण्डितानां पुरस्तात् कुसुमवत् कोमलः सेवक इव व्यवहरति स्म। हिन्दीभाषायाः राष्ट्रभाषात्वपदे प्रतिष्ठापकेषु हिन्दीसाहित्य सम्मेलनस्य च महामना उत्तमपुरुष आसीत्।

## अनुशीलनाय—

मालवीयस्य विद्याव्यसनस्य किं साधकम्? काशीहिन्दुविश्वविद्यालयस्य कः संस्थापकः? कथं मालवीयमास्तिकं वदिष्यसि? कीदृशे वेशे तस्य रुचिः?

## संस्कृत में अनुवाद कीजिए

( १ )

नट गीत गाता है। मैं काव्य लिखता हूं।
यह श्लोक पढ़ता है। नदी किनारा काटती है।
भिक्षुक भोजन चाहता है। मैं अन्न चाहता हूं।
तू श्लोक पढ़ता है। मैं पत्र लिखता हूं।

( २ )

लड़का मुंह से भात खाता है।
यह जल से नहाता है।
मैं आँख से बानर देखता हूं।
तू कलम से लेख लिखता है।
कृषक हल से खेत जोतता है।
ब्राह्मण धर्म से वेद पढ़ता है।
मैं हाथ से फल खाता हूं।
वह कान से मन्त्र सुनता है।

( ३ )

लड़का घर से पढ़ने जावेगा।
वह मुंह से जल पीवेगा।
मैं उसका कार्य अवश्य करूँगा।
श्याम उसके साथ घर जावेगा।
मैं घोड़े से प्रयाग जाऊँगा।
वह यहां से कब जावेगा।
लड़का स्नेह से अब बोलेगा।
मैं उसका कहना मान गया।

( ४ )

तू घर से जा। वह विद्यालय से जावे।
लड़का गीत गावे। मैं पुस्तक पढ़ूँ।
वे अब श्लोक बोलें। तू पुस्तक पढ़।
लड़के उसके साथ जावें। तुम घर जावो।
मैं लेख लिखूं? वे खेत जोतें।
तुमलोग दृश्य देखो। लड़के स्नान करें।

( ५ )

दिनेश मुँह से श्लोक पढ़ता है।
सुरेश हठ से दिनेश को जीतता है।
रमेश हृदय से मन्त्र जपता है।
गणेश मस्तक से सबको नमन करता है।
महेश नियम से काम करता है।
नरेन्द्र आँख से खेत देखता है।
सुरेन्द्र फूल से देवता पूजता है।
सैनिक हाथ से वाण फेंकता है।

( ६ )

किसान मिहनत से खेत जोतता है।
वह हाथ से बीज बोता है।
पशु दाँत से घास भरता है।
वह घड़े से पेड़ सींचता है।
तुम किससे लेख लिखते हो।
मैं हाथ से लेख लिखता हूं।
लड़के मुँह से कविता बोलते हैं।

( ७ )

वे लड़के किसके लिए पुस्तक दे गये?
तुम लोग किस काम के लिए आये?
हमलोग किस काम के लिए यहां आये?
ये लोग पढ़ने के लिए यहां आए हैं।
तुम लोग दर्शन के लिए वहां गये थे।
हमलोग पानी पीने के लिए वहां गये थे।
वे लोग कर सङ्ग्रह के लिए आये।

( ८ )

लड़के को घर पर पढ़ना चाहिए।
तुझे प्रयाग से घर जाना चाहिए।
मुझे घर से विद्यालय जाना चाहिए।
लड़कों को विद्यालय से घर जाना चाहिए।
तुम लोगों को सत्य बोलना चाहिए।
हमलोगों को उसके घर चलना चाहिए।
तुमको मुझे ऐसा कहना चाहिए।

# शब्द-धातु-रूपावली

| | कर्त्तरि प्रथमा | | | कर्मणि द्वितीया | | |
|---|---|---|---|---|---|---|
| | ए० व० | द्वि० व० | ब० व० | ए० व० | द्वि० व० | ब० व० |
| महत् | महान् | महान्तौ | महान्तः | महान्तम् | महान्तौ | महतः |
| सरित् | सरित् | सरितौ | सरितः | सरितम् | सरितौ | सरितः |
| दिश् | दिग् | दिशौ | दिशः | दिशम् | दिशौ | दिशः |
| जगत् | जगत् | जगती | जगन्ति | जगत् | जगती | जगन्ति |
| त्रि | | | त्रय | | | त्रीन् |
| चतुर् | | | चत्वारः | | | चतुरः |
| पञ्चन् | | | पञ्च | | | पञ्च |

## वर्तमाने लट्

| | प्रथमपुरुषे | | | मध्यमपुरुषे | | |
|---|---|---|---|---|---|---|
| | ए० व० | द्वि० व० | ब० व० | ए० व० | द्वि० व० | ब० व० |
| अस् | अस्ति | स्ततः | सन्ति | असि | स्थः | स्थ |
| दा | ददाति | दत्तः | ददति | ददासि | दत्तः | दत्त |
| भाष् | भाषते | भाषेते | भाषन्ते | भाषसे | भाषेथे | भाषध्वे |

## भविष्यति लट्

| प्रथमपुरुषे | | | मध्यमपुरुषे | | |
|---|---|---|---|---|---|
| ए० व० | द्वि० व० | ब० व० | ए० व० | द्वि० व० | ब० व० |
| भविष्यति | भविष्यतः | भविष्यन्ति | भविष्यसि | भविष्यथः | भविष्यथ |
| दास्यति | दास्यतः | दास्यन्ति | दास्यसि | दास्यथः | दास्यथ |
| भाषिष्यते | भाषिष्येते | भाषिष्यन्ते | भाषिष्यसे | भाषिष्येथे | भाषिष्यध्वे |

| करणे तृतीया | | | सम्प्रदाने चतुर्थी | | |
|---|---|---|---|---|---|
| ए० व० | द्वि० व० | ब० व० | ए० व० | द्वि० व० | ब० व० |
| महता | महद्भ्याम् | महद्भिः | महते | महद्भ्याम् | महद्भ्यः |
| सरिता | सरिद्भ्याम् | सरिद्भिः | सरिते | सरिद्भ्याम् | सरिद्भ्यः |
| दिशा | दिग्भ्याम् | दिग्भिः | दिशे | दिग्भ्याम् | दिग्भ्यः |
| जगता | जगद्भ्याम् | जगद्भिः | जगते | जगद्भ्याम् | जगद्भ्यः |
| | | त्रिभिः | | | त्रिभ्यः |
| | | चतुर्भिः | | | चतुर्भ्यः |
| | | पञ्चभिः | | | पञ्चभ्यः |

उत्तमपुरुषे

| ए० व० | द्वि० व० | ब० व० |
|---|---|---|
| अस्मि | स्वः | स्मः |
| ददामि | दद्वः | दद्मः |
| भाषे | भाषावहे | भाषामहे |

उत्तमपुरुषे

| ए० व० | द्वि० व० | ब० व० |
|---|---|---|
| भविष्यामि | भविष्यावः | भविष्यामः |
| दास्यामि | दास्यावः | दास्यामः |
| भाषिष्ये | भाषिष्यावहे | भाषिष्यामहे |

**अपादाने पञ्चमी** | **सम्बन्धे षष्ठी**

| ए० व० | द्वि० व० | ब० व० | ए० व० | द्वि० व० | ब० व० |
|---|---|---|---|---|---|
| महतः | महद्भ्याम् | महद्भ्यः | महतः | महतोः | महताम् |
| सरितः | सरिद्भ्याम् | सरिद्भ्यः | सरितः | सरितोः | सरिताम् |
| दिशः | दिग्भ्याम् | दिग्भ्यः | दिशः | दिशोः | दिशाम् |
| जगतः | जगद्भ्याम् | जगद्भ्यः | जगतः | जगतोः | जगताम् |
| | | त्रिभ्यः | | | त्रयाणाम् |
| | | चतुर्भ्यः | | | चतुर्णाम् |
| | | पञ्चभ्यः | | | पञ्चानाम् |

## अनद्यतने लङ्

| प्रथमपुरुषे | | | मध्यमपुरुषे | | |
|---|---|---|---|---|---|
| ए० व० | द्वि० व० | ब० व० | ए० व० | द्वि० व० | ब० व० |
| आसीत् | आस्ताम् | आसन् | आसीः | आस्तम् | आस्त |
| अददात् | अदत्ताम् | अददुः | अददाः | अदत्तम् | अदत्त |
| अभाषत | अभाषेताम् | अभाषन्त | अभाषथाः | अभाषेथाम् | अभाषध्वम् |

## आज्ञायाम् लोट्

| प्रथमपुरुषे | | | मध्यमपुरुषे | | | उत्तमपुरुषे | | |
|---|---|---|---|---|---|---|---|---|
| ए० व० | द्वि० व० | ब० व० | ए० व० | द्वि० व० | ब० व० | ए० व० | द्वि० व० | ब० व० |
| अस्तु | स्ताम् | सन्तु | एधि | स्तम् | स्त | असानि | असाव | असाम |
| ददातु | दत्ताम् | ददतु | देहि | दत्तम् | दत्त | ददानि | ददाव | ददाम |
| भाषताम् | भाषेताम् | भाषन्ताम् | भाषस्व | भाषेथाम् | भाषध्वम् | भाषे | भाषावहे | भाषामहे |

## अधिकरणे सप्तमी

| ए० व० | द्वि० व० | ब० व० |
|---|---|---|
| महति | महतोः | महत्सु |
| सरिति | सरितोः | सरित्सु |
| दिशि | दिशोः | दिक्षु |
| जगति | जगतोः | जगत्सु |
| | | त्रिषु |
| | | चतुर्षु |
| | | पञ्चसु |

उत्तमपुरुषे

| ए० व० | द्वि० व० | ब० व० |
|---|---|---|
| आसम् | आस्व | आस्म |
| अददाम् | अदद्व | अदद्म |
| अभाषे | अभाषावहि | अभाषामहि |

---

# संस्कृत में अनुवाद कीजिये

## ( हस्तिपक पृ. २ )

यह कौन पशु ? यह महान हाथी ।
हाथी के ऊपर कौन बैठता है ?
जो हाथी की गर्दन पर बैठता है ।
उसे हस्तिपक कहते हैं ।
हस्तिपक क्या करता है ?
हाथी के मुँह में यह क्या ?
हाथी सूंड से क्या करता है ?
इन्द्र के हाथी को लोग क्या कहते हैं ?
ऐरावत किसका हाथी है ?

## ( उष्ट्रः पृ. ४ )

तू जानता है यह किसका चित्र है ?
मैं जानता हूं यह ऊंट का चित्र है ।
ऊँट क्या करता है ?
मुझे ऊंट अच्छा लगता है ।
तुमको ऊंट क्यों अच्छा नहीं लगता ?
ऊँट का मरुदेश में उपयोग होता है ।
ऊँट बोझा ढोने में कुशल होता है ।
मैं देखता हूं ऊँट बाजार में बोझा ढोता है ।

## ( श्रीशङ्कराचार्यः पृ. ६ )

श्री शङ्कराचार्य का आविर्भाव कहाँ हुआ ?
श्री शङ्कराचार्य ने क्या किया ?
श्री शङ्कराचार्य ने अद्वैतमत की स्थापना की ।
श्री शङ्कराचार्य के चार मठ हैं ।
पूर्व में गोवर्धन मठ पश्चिम में शारदामठ, उत्तर में ज्योतिर्मठ, दक्षिण में शृङ्गेरी मठ हैं ।
इन मठों में उनके शिष्योपशिष्य रह कर धर्म का प्रचार करते हैं ।
दध्यानय, मध्वरिः, के विच्छेद कीजिए ।

## ( संस्कृत भाषा पृ. ८ )

मेरा मन संस्कृत पढ़ने में लगता है ।
तुम संस्कृत क्यों नहीं पढ़ते ?
जो संस्कृत पढ़ता है उसे हिन्दी पढ़ने में सहायता मिलती है ।
संस्कृत पढ़ने का उद्देश्य क्या है ?
संस्कृत पढ़ने से ईश्वर में विश्वास होता है ।
ईश्वरविश्वास मनुष्य को बुरे मार्ग से हटाता है ।
संस्कृतज्ञान में भारतीय भाषाओं के पढ़ने में सहायता मिलती है ।

## ( प्रातः किमाचरेत् ? पृ. १० )

मैं परिश्रम से संस्कृत पढ़ता हूं ।
प्रातः कब उठना चाहिए ?
उस समय किसका स्मरण करना चाहिए ।
सूर्योदय से पहिले उठना चाहिए ।
हृदय में ईश्वर का स्मरण करना चाहिए ।
अपने बड़े को प्रणाम करना चाहिए ।
नित्यकृत्य से निवृत्त होकर पढ़ना चाहिए ।
भोजनसमय अन्न को ईश्वर के लिए अर्पण करना चाहिए । भोजन के बाद विश्राम करके स्कूल जाना चाहिए ।

## ( वाहनानि पृ. ११ )

भारत में साधारण सवारी क्या है ?
महाराज और धनिक घोड़े हाथी पर चढ़ते हैं ।
साधारण जन बैल गाड़ी और रेलगाड़ी से जाते आते हैं ।
स्त्रियाँ पालकी से आती जाती हैं ।
धनिक जन मोटर से कहीं जाते हैं ।
मैं साइकिल पर चढता हूं ।
लड़के पैदल जाते हैं ।
तुम मोटर से वहां जाओ ।

**( गृहपरिष्कारः पृ. १३ )**

घर की तरह नगर की भी सफाई करनी चाहिए।

घर की सफाई से अपना हित होता है।

नगर की सफाई से लोगों का हित होता है।

नगर की तरह गाँव में सफाई होनी चाहिए।

शरीर की तरह घर और नगर की सफाई आवश्यक है।

घर और आँगन गोबर से लिपना चाहिए।

घर का बहारन एक निश्चित स्थान पर फेंकना चाहिए।

घर का बहारन घर के कोने में नहीं रखना चाहिए।

घर की सारी वस्तुएं यथास्थान रखना चाहिए

**( अस्माकं स्वदेशः पृ. १७ )**

सामने भारत का अपूर्व चित्र देख।

मैं प्रतिदिन नतमस्तक से उसे प्रणाम करता हूँ।

स्वदेश वन्दनीय है।

भारतदेश पुरुषोत्तम की तरह वर्तमान है।

उसके मस्तक पर हिमाचल कटिदेश में विन्ध्याचल है।

कश्मीर प्रकृति सौन्दर्य का घर है।

भारत वर्ष सब तरह से सम्पन्न है।

**( काशी पृ. १९ )**

काशी गङ्गा तट पर बसी है।

गङ्गा नदी गङ्गोत्तरी शिखर से निकलती है।

काशीतट की शोभा मनोहर है।

लोग गङ्गातट आते जाते हैं।

लोग जल में नहाते और तट पर गाते और घूमते हैं।

काशी मन्दिरों की खान है।

पूर्वतटपर काशीनरेशका विशाल किला है।

**( रामायणम् पृ. २२ )**

रामायण के रचयिता वाल्मीकि मुनि हैं।

रामचन्द्रकी राजधानी अयोध्या है।

अयोध्या सरयूतट पर बसी है।

पिता के आदेश से रामचन्द्र वन गये।

वे १४ वर्ष तक बन में रहे।

रावण सीतादेवी को चुरा ले गया।

रामचन्द्र बानरों की सहायता से सीता देवी को लाये।

**( कालिदासः पृ. ३० )**

कालिदास संस्कृत साहित्य में प्रमुख कवि हैं।

लोग कालिदास को कविगुरु कहते हैं।

कालिदास काली वरदान से महान् कवि हुए।

कालिदास की स्त्री विद्योत्तमा थी।

कालिदास के ग्रन्थों का संसार में बड़ा आदर है।

कालिदास उपमा देने वस्तु चित्रण में अपूर्व हैं।

कालिदास विश्ववन्दनीय कवि हैं।

**( हिमालयः पृ. ३१ )**

पर्वत से झरना निकलता है।

वह नीचे चट्टानों पर गिरता है।

संसार में सब से ऊंचा हिमालय है।

इसी से लोग हिमालय को पर्वतराज कहते हैं।

हिमालय की शिखर पर अधिक वर्फ गिरती है।

हिमालय से गङ्गा नदी निकलती है।

हिमालय से भारत की शोभा है।